प्रकारतायां प्रतिबन्धकतावैशिष्ट्यमाधेयत्वस्वविशिष्टत्व उभयसम्बन्धेन, आधेयत्वं स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन, स्वाधिकरणत्वं भेदप्रतियोगितावच्छेदकत्वञ्च स्वत्वम्, स्ववैशिष्ट्यं स्वनिरूपितप्रतिबध्यतावच्छेदकविशेष्यतावच्छेदकधर्मविशिष्टत्वाधेयत्वान्यतरसम्बन्धेन, धर्मवैशिष्ट्यञ्च स्वावच्छिन्नव्यापकीभूताभावप्रतियोगितावच्छेदकपर्याप्त्यवच्छेदकताकत्वस्वावच्छिन्नावृत्तित्वस्वपर्याप्त्यवच्छेदकताकत्वस्वावच्छिन्नवृत्तित्वस्वपर्याप्त्यवच्छेदकताकत्वस्वान्यतमसम्बन्धेन, आधेयता स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन, स्वाधिकरणत्वं स्वविशिष्टनिश्चयत्वसम्बन्धेन, निश्चये स्ववैशिष्ट्यं स्वविशिष्टाधिकरणताविशिष्टत्वसम्बन्धेन, अधिकरणतायां स्ववैशिष्ट्यं स्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वाधेयत्वोभयसम्बन्धेन, आधेयता स्वविशिष्टप्रकारतावच्छेदकावच्छिन्नत्वसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यं स्वाश्रयनिरूपकविशेष्यतानिरूपितत्वस्वाश्रयावच्छेदकावच्छिन्नव्यापकत्वविशिष्टस्वनिरूपकभेदप्रतियोगितावच्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, अधिकरणतावैशिष्ट्यञ्च निश्चये स्वाश्रयनिरूपकनिश्चयविशिष्टत्वविशेष्यतानिरूपकत्वोभयसम्बन्धेन, निश्चये निश्चयवैशिष्ट्यमेकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन, विशेष्यतायां स्ववैशिष्ट्यञ्च स्वाश्रयावच्छेदकतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारतानिरूपितत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, भेदप्रतियोगितावच्छेदकत्वञ्च स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टत्वसम्बन्धेन, प्रतिबन्धकतावैशिष्ट्यं स्वानवच्छेदकविषयताशून्यत्वसम्बन्धेन; तेन ह्रदो वह्निमानित्यत्र बलवद्द्रव्याप्यवद्ध्रदपक्षाभाववत्त्ववदादौ नातिव्याप्तिः, यद्यप्येवं परिष्कारे गगनाभाववदभाववत्कालीनगगनं गगनवदित्यत्र गगनवृत्तिव्याप्यवत्तारूपगगननिष्ठाभावप्रतियोगित्वेऽव्याप्तिः, गगनावच्छेदकतया गृहीतधर्मवत्तानिश्चयस्याभाववान् गगनाभाववानिति निश्चयविशिष्टतादृशगगनवृत्तिरभाव इति निश्चयत्वावच्छिन्नप्रतिबन्धकतापेक्षया अतिरिक्तप्रतिबन्धकत्वे मानाभावात् । तस्याश्च स्वानवच्छेदकविषयताशून्यत्वसम्बन्धेनासत्त्वात्, तथापि तादृशप्रतिबध्यतावच्छेदकविशेष्यतावच्छेदकधर्मविशिष्टत्व स्वावच्छिन्नव्यापकीभूताभावप्रतियोगित्वस्वपर्याप्त्यवच्छेदकताकविषयताविशिष्टत्वस्वावच्छिन्नावृत्तित्वस्वपर्याप्त्यवच्छेदकताकविषयताविशिष्टत्वस्वावच्छिन्नवृत्तित्वस्वपर्याप्त्यवच्छेदकताकविषयताविशिष्टत्वएतदन्यतमसम्बन्धेन, विषयतावैशिष्ट्यञ्च स्वनिरूपितत्वतादात्म्यान्यतरसम्बन्धेन; इत्यत्र नोक्ताव्याप्तिः । यद्यप्युक्तपक्षसाध्यकस्थले तादृशगगनत्वव्यापकीभूताभावप्रतियोगित्वस्याप्रसिद्धेः तादृशव्याप्यवदभावविशिष्टगगने चातिव्याप्तिः । एवं साध्याभावस्य साध्याभाववत्त्वेनैव पक्षतावच्छेदकव्यापकत्वस्य पक्षत्वेतयाऽऽकाशसमवायत्वादिसाध्यकस्थले पक्षतावच्छेदकव्यापकीभूताभावप्रतियोगित्वस्याप्रसिद्ध्याऽव्याप्तिः, एवं पक्षतावच्छेदकभेदप्रतियोगितावच्छेदकत्वव्याप्यवत्त्वसाध्यादौ, तथापि प्रकारतायां उक्तप्रतिबन्धकतावैशिष्ट्यशरीरे अन्यतरत्वघटकप्रथमसम्बन्ध-

स्थाने स्वनिरूपितप्रतियोगितावच्छेदकीभूतप्रकारताविशिष्टत्वनिवेशात् । गगनाभाववद्भाववत्कालीनगगनाभाववद्भावविशिष्टवत्कालीनगगनाभाववद्भाववद्भावप्रतियोगित्ववत्कालीनगगनपक्षकगगनसाध्यकस्थले तादृशगगनत्वस्यापरीभूताभावप्रतियोगित्वव्याप्यवद्गगने तादृशप्रतियोगितावच्छेदकतया गृहीतधर्मवत्तानिश्चये प्रतिबन्धकताभावेन निरुक्तान्यतरघटकद्वितीयसम्बन्धमात्रेण उद्देश्यप्रतिबन्धकतावैशिष्ट्यस्य तत्प्रकारताप्रामसत्त्वेऽपि नातिव्याप्तिः, न वा तादृशाव्याप्तिवारणाय द्वितीयसम्बन्धे निश्चये निश्चयवैशिष्ट्य तादात्म्येन निवेश्य व्यापकत्वस्य स्वरूपसम्बन्धेन विवक्षणे तादृशप्रतियोगितव्याप्याभाववद्वृत्तिमद्गगनेऽतिव्याप्तिः, न वा पूर्वोक्तव्याप्तिः, प्रकारताविशिष्टत्व स्वसमानाधिकरणेत्यादिवैयधिकरण्यसम्बन्धेन, स्वाधिकरणत्व स्वविशिष्टनिश्चयत्वसम्बन्धेन, निश्चये स्व वैशिष्ट्य पूर्ववदेव बोध्यम् । नच उक्तरीत्या अन्यतरत्वघटकद्वितीयसम्बन्धनिवेशे स्वरूपसमवायउभयसम्बन्धेन अभावसाध्यकस्थले सम्बन्ध वच्छिन्नभावत्वावच्छिन्नप्रतियोगिताकाभावस्वरूपसमवायउभयसम्बन्धावच्छिन्नाभाववत्त्वावच्छिन्नप्रतियोगिताकाभावव्याप्यव्याप्यवत्कालीनघटपक्षकस्थले निरुक्तसम्बन्धावच्छिन्नाभाववत्त्वावच्छिन्नप्रतियोगिताकाभावव्याप्यव्याप्यवत्तादृशघटे अतिव्याप्तिः स्वरूपसमवायउभयसम्बन्धावच्छिन्नाभावव्याप्यव्याप्यत्वावच्छिन्नप्रकारताया उद्देश्यप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वात्, एवं घटे गगनाभाववद्भाववत्कालीनगगनस्य साध्यत्वे गगनाभाववद्भाववद्वृत्तिगगनाभावव्याप्यवद्घटे चातिव्याप्तिरिति वाच्यम्,—प्रतिबध्यतावच्छेदकीभूतप्रकारताया महत्तानुमितित्वव्यापकत्वनिवेशेन उक्तदोषोद्धारात् । न चैवमपि ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवह्न्यभावव्याप्यवद्ह्रदेऽतिव्याप्तिः, भेदप्रतियोगितावच्छेदकसम्बन्धे उद्देश्यप्रकारतावैशिष्ट्य प्रतिबध्यतायां स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यकत्वावच्छेदकानवच्छिन्नप्रकारकानुमितित्वव्यापकत्वविशिष्टान्तरविषयकत्वाव्यापकत्वउभयसम्बन्धेन निवेश्य उक्तातिव्याप्तिवारणे चाभेयत्व आधेयत्वाभाववदित्यत्र आधेयत्ववृत्तिव्याप्यवदाधेयत्वे अव्याप्तिरिति वाच्यम्, निरुक्तान्यतरसम्बन्धान्तर्गतप्रथमसम्बन्धघटकाभावादेव तत्राव्याप्त्यनवकाशात्, अत एव तत्साध्यकत्वाच, नचैव सति ह्रदः काञ्चनमयवह्निमानित्यत्र वह्न्यभाववत्तावुद्धिं प्रति काञ्चनमयवह्न्यवच्छेदेन गृहीतधर्मवत्तानिश्चयस्य प्रतिबन्धकत्वे भट्टाचार्यसम्मत्यदर्शनात् । वह्न्यभावव्याप्यवद्ह्रदेऽव्याप्तेः तादृशप्रतिबध्यतावच्छेदकप्रकारतावैशिष्ट्यशरीरे तादृशप्रकारतावच्छेदकतापर्याप्तिनिवेशस्य आवश्यकत्वात्, अन्यथा वह्न्यभावव्याप्याभावकालीनवह्नेरसाध्यत्वे सत्प्रतिपक्षोच्छेदापत्तिः स्यादेवेत्यादिति वाच्यम्,—चन्द्रनारायणभट्टाचार्यप्रभृतिभिः वह्निसामान्याभाववत्ताबुद्धौ महानसीयवह्निव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वप्रदर्शनेन निरुक्तज्ञानप्रतिबन्धकतायाः सर्वसदनुमतत्वात्, एतदभिप्रायेणैव हि घटकालीनो यो वह्न्यभाव तत्साध्यव्याप्यवद्ध्रदेऽतिव्याप्तिरिति परैरुक्तम् । न चैव सति घटकालीनवह्न्यभावव्याप्यवद्ध्रदे पक्षे ।

तिव्याप्तिर्दुर्वारैवेति वाच्यम्,—परोक्तरीत्या उद्देश्ये विशिष्टान्तराघटितत्वनिवेशादेव तद्वारणात् । न च तन्निवेशे गगनाभाववद्भाववत्कालीनघटो गगनवानित्यत्र यद्धृत्वभावप्रतियोगित्वव्याप्यवद्गगनाव्याप्तिरिति परोक्तरीत्या उद्देश्ये विशिष्टान्तराघटितत्वनिवेशो न सम्भवतीति वाच्यम्, तादृशदोषस्य परमत एव सम्भवात्, अस्मन्मते भट्टाचार्योक्तसामान्यलक्षणाक्रान्तत्वेन उद्देश्यस्य सद्धाप्यत्वस्य लक्ष्यत्वास्वीकारात् । न च "सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्" इति न्यायेन लक्षणाक्रान्तस्य लक्ष्यत्वानभ्युपगमोऽनुचित इति वाच्यम्, दोषपदप्रवृत्तिनिमित्तस्यैव भट्टाचार्येण उक्तत्वेन प्रवृत्तिनिमित्तशून्यस्यादोषतायाः सर्वसम्मतत्वात् । तर्हि सन्दिग्धहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्यापि प्रवृत्तिनिमित्तशून्यत्वेनालक्ष्यत्वं स्यादिति वाच्यम्, दोषपदप्रवृत्तिनिमित्ते परिष्कृत्य निरुक्तसत्प्रतिपक्षस्य लक्ष्यतां वदतो भट्टाचार्यस्य तत्साधारणप्रवृत्तिनिमित्तपरिष्कार एव तात्पर्यावगमात् । न चैवमपि जलवद्ध्रदकालीनह्रदो वह्निमानित्यत्र जलव्यापकवह्न्यभावाभावव्यापकीभूताभावप्रतियोगिमत्तादशपक्षे अतिव्याप्तिः, उद्देश्यज्ञाननिष्ठायाः जलव्यापकवह्न्यभावत्वावच्छिन्नविषयताविषयिताविशिष्टायाः जलवद्ध्रदविषयतानिष्ठपक्षत्वावच्छिन्नप्रतिबन्धकतायाः विशिष्टान्तरविषयकत्वाव्यापकत्वात् । उक्तरीत्या जलव्यापकवह्न्यभावावच्छेदकतया गृहीतधर्मवत्ताविषयस्य वह्निमत्ताबुद्धिप्रतिबन्धकत्वाद्धेति वाच्यम्,—स्वरूपतः साध्यवत्ताज्ञानधर्मितावच्छेदकीभूता ये ये धर्माः तत्प्रत्येक तद्धर्मितावच्छेदककसाध्यवत्ताज्ञाने तत्तद्धर्मधर्मितावच्छेदककयत्किञ्चिद्धर्मीयविशिष्टप्रकारकनिश्चय- विशिष्टान्तरविषयकत्वानवच्छिन्नप्रतिबन्धकतावान् भवति तद्रूपावच्छिन्नप्रकारतायाः एव उद्देश्यप्रकारतारूपतया विवक्षणेन उक्तातिव्याप्तिनिरासात् । न चैवं सति ह्रदवृत्तिजलव्याप्यवह्न्यभावादावव्याप्तिरिति वाच्यम्, उद्देश्यप्रकारतायाः उद्देश्यप्रतिबन्धकताविशिष्टत्वस्यैव तदर्थत्वात् । प्रतिबन्धकताविशिष्ट्यञ्च स्वसमानाधिकरणस्वाश्रिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्व स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताकविशेष्यताशालिधर्मिनिरवस्थसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वञ्च स्वविशिष्टप्रतिबन्धकतानिरूपितप्रतिबध्यतासम्बन्धेन । प्रतिबन्धकतायां स्वविशिष्टत्वं स्वावच्छेदकावच्छिन्नप्रकारताविशिष्टत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यताविशिष्टत्वतदुभयसम्बन्धेन । प्रकारतांशविशिष्ट्यञ्च विशिष्टान्तरविषयकत्वानवच्छिन्नत्वस्वविशिष्टत्वनिरूपितविशेष्यतावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन । विशेष्यतांशविशिष्ट्यमपि विशिष्टान्तरविषयकत्वानवच्छिन्नत्वस्वविशिष्टत्वनिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन । अधिकं विशिष्टद्वयाघटितत्वविचारोपत्रिकायां अवधेयम् । अनक्त्वायामुद्देश्यप्रकारतावैशिष्ट्यनिवेशात् प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितपदार्थमात्रे अतिव्याप्तिसम्भवः ।

धर्मावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वावच्छिन्नविषयकत्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकतावत्त्वएतदुभयसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वोभयसम्बन्धेन । धर्मवैशिष्ट्यं स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं भेदप्रतियोगितावच्छेदकत्वञ्च स्पष्टम् । द्वितीयसम्बन्धघटकस्वाधिकरणत्वं स्वावच्छिन्नविषयकनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वाश्रयत्वस्वविशिष्टजनकताश्रयत्वउभयसम्बन्धेन । जनकतायां स्ववैशिष्ट्यं स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नविशिष्टपक्षप्रकारत्वानवच्छिन्नविशिष्टसाध्यप्रकारत्वानवच्छिन्नविशिष्टपक्षविशिष्टसाध्यप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिप्रकारताविशिष्टत्वसम्बन्धेन । प्रकारतावैशिष्ट्यञ्च स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितत्वाभेदत्वोभयसम्बन्धेन । आधेयता पूर्वोक्तसम्बन्धावच्छिन्ना । प्रतिबन्धकतावृत्तित्वञ्च प्रकारतायां स्वसमानाधिकरणेत्यादिभेदवत्त्वस्वविशिष्टत्वोभयसम्बन्धेन । स्वाधिकरणत्वं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन । स्ववैशिष्ट्यं स्वसमानाधिकरणेत्यादिभेदवत्त्वस्वविशिष्टत्वान्यतरसम्बन्धेन । स्वाधिकरणत्वं स्वविशिष्टाधिकरणताविशिष्टत्वसम्बन्धेन । अधिकरणतायां स्ववैशिष्ट्यञ्च स्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वसम्बन्धेन । अधिकरणतावैशिष्ट्यं स्वविशिष्टनिश्चयत्वसम्बन्धेन । निश्चये स्ववैशिष्ट्यं स्वविशिष्टनिश्चयविशिष्टत्वस्वविशिष्टविशेष्यतानिरूपकत्वउभयसम्बन्धेन । निश्चये वैशिष्ट्यं स्वविशिष्टावच्छेदकताविशिष्टत्वसम्बन्धेन । अवच्छेदकतायां स्ववैशिष्ट्यं स्वाश्रयत्वस्वनिरूपकभेदप्रतियोगिस्वविशिष्टप्रकारतानिरूपितविशेष्यतानिरूपितत्वोभयसम्बन्धेन । प्रकारतायां स्ववैशिष्ट्यं स्वाश्रयावच्छेदकावच्छिन्नव्यापकत्वविशिष्टस्वनिरूपकभेदप्रतियोगितावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकीभूतप्रकारतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन । अवच्छेदकतावैशिष्ट्यञ्च निश्चये निरूपकत्वस्वनिरूपितविशेष्यतानिरूपितप्रकारतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितस्वावच्छेदकावच्छिन्नावच्छेदकताकविशेष्यताकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । निश्चये निश्चयवैशिष्ट्यञ्च एककालावच्छिन्नत्वएकात्मवृत्तित्वोभयसम्बन्धेन । विशेष्यतायां स्ववैशिष्ट्यं स्वनिरूपकभेदप्रतियोगितावच्छेदकीभूतप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वस्वाश्रयावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन । विशेष्यतावैशिष्ट्यं निरूपकत्वस्वनिरूपकप्रकारतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितस्वावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । अन्यतरत्वघटकस्ववैशिष्ट्यञ्च स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं स्वविशिष्टनिश्चयत्वसम्बन्धेन ।

म्बन्धेन । प्रतिबन्धकतायां स्ववैशिष्ट्यं स्वसमानाधिकरणैक्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं स्वावच्छेदकीभूताभावत्वावच्छिन्नविषयतात्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वमवच्छेदकतासम्बन्धेन । द्वितीयसम्बन्धनिवेशाच्च भेदत्वविशिष्टसम्बन्धनिवेशान्निरव्याप्तिः ।

अथवा द्वितीयसम्बन्धं परित्यज्य जनकतायां स्वावच्छेदकविषयताश्रयत्वसम्बन्धेन स्वावच्छिन्नविषयताव्यापकत्वं निवेश्यम् । न चैवं निवेशे एकरूपरूपेण जनकतापक्षे जलत्वव्यापकवह्न्यभावसमानाधिकरणजलत्ववानल्पव्यापकवह्न्यभावसमानाधिकरणजलत्ववानोभयवद्ध्रदे जलत्वव्याप्यवह्न्यभावसमानाधिकरणजलत्ववद्वानल्पव्यापकवह्न्यभावसमानाधिकरणैवानल्पह्रदे चातिव्याप्तिरिति वाच्यम्,—तत्र द्वितीयसम्बन्धनिवेशपक्षे उक्तदोषानवकाशात् । तद्निवेशपक्षेऽपि अधिकरणताविशिष्टप्रकारताविशिष्टत्वस्यैव लक्षणघटकत्वेन उक्तदोषानवकाशात् । प्रकारतायामधिकरणतावैशिष्ट्यं स्वाश्रयप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वाधेयत्वोभयसम्बन्धेन । आधेयता स्वसमानाधिकरणैक्यादिभेदवत्स्वविशिष्टधर्मविशिष्टत्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । स्वाधिकरणत्वं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालित्वोभयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वञ्च स्वविशिष्टप्रतिबन्धकताश्रयत्वस्वाश्रयविशिष्टजनकताश्रयत्वोभयसम्बन्धेन । प्रतिबन्धकतायां स्ववैशिष्ट्यं आधेयतासम्बन्धेन । आधेयता स्वनिरूपितप्रकृतानुमितित्वव्यापकप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिप्रकारतावृत्तित्वस्वावच्छिन्नप्रतियोगिताकभेदनिरूपितस्वसमानाधिकरणैक्यादिभेदवत्त्व एतदुभयसम्बन्धेन । प्रतिबन्धकतावृत्तित्वं प्रकारतायां स्पष्टम् । तृतीयसम्बन्धे स्वाधिकरणत्वं स्वरूपसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वाश्रयविशिष्टत्वसम्बन्धेन । वैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतासम्बन्धेन । तृतीयसम्बन्धनिवेशात् न प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितपदार्थमादायातिव्याप्तिः, न वा ह्रदत्ववद्धट अभावविशिष्टव्यापकाभावाभाववालीनभावाभावत्ववानित्यत्र विशिष्टसामान्यत्वाभावव्याप्यह्रदत्वाभाववद्वृत्तिसत्ताकघटे जलत्वह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यजलत्वाभावदंशेऽतिव्याप्तिः, जनकतायां प्रकारतावैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितत्वसम्बन्धेन । धर्मे प्रकारतावैशिष्ट्यञ्च स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारताक-

र्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य स्वविशिष्टजनकतावि-
शिष्टस्वसम्बन्धावच्छिन्नत्वनिष्ठप्रतियोगिताकान्योन्याभावस्योभयसम्बन्धेन । जनकता-
याः स्ववैशिष्ट्यं स्वसमानाधिकरणत्वस्वाभिन्नभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं स्वनिरूपित
विशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालिनिश्च-
यत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वावच्छेदकविषयताशून्यत्वसम्बन्धेन ।
जनकतावैशिष्ट्यं पूर्ववत् । धर्मवैशिष्ट्यं स्वभेदत्वसम्बन्धेन । भेदप्रतियोगिताव-
च्छेदकं च स्वनिरूपकभेदप्रतियोगितावच्छेदकधर्मनिष्ठान्यत्वसम्बन्धेन । वह्न्यभाव-
व्याप्यवत्त्वेनालयह्रदो वह्न्यभाववानित्यनुमितिजनकतामादाय वह्न्यभावव्याप्यजलव-
त्त्वाद्ह्रदे प्रमेयह्रदो वह्न्यभाववानित्यनुमितिजनकतामादाय वह्न्यभावव्याप्यवत्प्र-
मेयह्रदे चातिव्याप्तिरत्र उक्ततृतीयसम्बन्धनिवेशादेव दूरोत्सारिता वेदितव्या ।
इत्थञ्च वह्न्यभावपक्षकपक्षाव्यवहितोत्तरकालीनह्रदो वह्निमानित्यत्र वह्न्यभाव
व्याप्यव्याप्यवत्तावद्ह्रदेऽतिव्याप्तिश्च, वह्न्यभावव्याप्यव्याप्यवान् वह्न्यभाववान्
वह्न्यभावव्याप्यव्याप्यवान् तादृशो ह्रदः, घटाभावव्याप्यव्याप्यवान् वह्न्यभाववान्
घटाभावव्याप्यव्याप्यवांश्च तादृशो ह्रद इति निश्चयानामेकरूपेण प्रतिबन्धकत्वाभ्यु-
पगमेन उक्ततृतीयसम्बन्धाभावादेव वारणीया । वह्न्यभावव्याप्यव्याप्यवह्न्यभाव
वद्ह्रदावृत्तित्वात्तत्र निरुक्ततृतीयसम्बन्धाभावात् निरुक्तरीत्या निविष्टान्तराघटित-
त्वाभावाच्च न सम्भवति । न चैवं तृतीयसम्बन्धनिवेशे अभावविशिष्टव्यापकतामात्र,
स्याभावकालीनतत्साध्यवत्ताभाववानित्यत्र तादृशसाध्याभावाभाववद्वृत्तिमत्पक्षाव्या-
प्तिरिति वाच्यम्, तावत्सम्बन्धघटाहितनिश्चयानामेकरूपेण प्रतिबन्धकत्वाभ्युपगमे-
नादोषात् । प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितवह्न्यभावव्याप्यवह्न्यभाववद्ह्र-
दातिव्याप्तिस्तु निरुक्तविशिष्टान्तराघटितत्वाभावादेव वारणीया । वृत्तिव्यापकता-
गगनाभावकालीनगगनपक्षकगगनसाध्यकस्थले उक्तातिव्याप्तिः तदन्यघटितपूर्वोक्ताति-
व्याप्तिश्च उक्तविशिष्टान्तराघटितत्वाभावादेव निवारिता । इत्थं वह्निमानित्यत्र पक्षका-
लीनवह्न्यभावाभाववद्वृत्तिमत्पक्षेऽतिव्याप्तिः सम्बन्धाभावादेव नास्ति । तच्छरीरे
वह्न्यभावस्यावश्यकत्वात् । न च तदभावव्याप्यभेदेऽपि तन्निर्णयस्य वह्न्यनुमिति
विरोधित्वमावश्यकम्, अन्यथा महानसीयवह्निव्याप्यवत्तापरामर्शकाले उक्तपरामर्शे
च सति सदाद्याकारानुमितिर्दुर्वारा स्यादिति वाच्यम्, सदाद्याकारानुमित्यापत्तिवार-
णायैव, कस्यचित्प्रतिबन्धकताघटनस्य कश्चिदप्यदृष्टत्वात् । प्रकारान्तरेण प्रतिबन्ध-
कत्वे स्थापिते सति तद्गतिवक्ष्यतावच्छेदकाक्रान्ततया हि सदाद्याकारानुमितिर्निरस्ता
ग्रन्थकृता । अन्यथा 'पर्वत'इत्यादिना सदाद्याकारानुमित्यापत्तिं भट्टाचार्येणानु-
पपन्नं स्यात् । एतदर्थमेव तादृशकपिसंयोगाभावव्याप्यवत्ताज्ञानस्यापि प्रतिबन्धकत्व
कल्पनसम्भवात् । एवं तादृशनिश्चयस्य प्रतिबन्धकत्वादिन्यायेन प्रतिबन्धकत्वोपगमे सा-
मान्यलक्षणस्य पर्वतपक्षकवह्न्यभावसाध्यकस्थले पर्वतीयवह्निव्याप्यवत्त्वेऽतिव्या-
प्ति । अस्तु वा उक्तनिश्चयस्य विरोधित्वम्, तथापि चोक्तातिव्याप्तिस्तथैव

स्वसामान्याधिकरण्यावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगितानिरूपकभेदवत्त्वस्वविशिष्टजनकतावि-शिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभावत्वोभयसम्बन्धेन । जनकता-या स्ववैशिष्ट्यं स्वसमानाधिकरणत्वादिभेदवत्त्वसम्बन्धेन । स्वाधिकरण्य स्वनिरूपित-विधेयतावच्छेदकावच्छिन्नविधेयतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालिनिश्च-यत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकस्य स्वावच्छेदकविषयताशून्यत्वसम्बन्धेन। जनकतावैशिष्ट्यं पूर्ववत् । धर्मवैशिष्ट्यं स्वसेतरादिसम्बन्धेन । भेदप्रतियोगिताव-च्छेदक च स्वनिरूपकभेदप्रतियोगितावच्छेदकप्रतिबन्धकत्वासम्बन्धेन । वह्न्यभाव-व्याप्यवत्त्वावच्छिन्नो वह्न्यभाववानित्यनुमितिजनकतामादाय वह्न्यभावव्याप्यजलव-त्ताद्दृशह्रदे प्रमेयह्रदो वह्न्यभाववानित्यनुमितिजनकतामादाय वह्न्यभावव्याप्यप्र-मेयह्रदे चातिव्याप्तिरशङ्का उक्ततृतीयसम्बन्धनिवेशादेव दूरोत्सारिता वेदितव्या । इत्थञ्च वह्न्यभाववद्वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभाव व्याप्यव्याप्यवत्ताद्दृशह्रदेऽतिव्याप्तिश्च, वह्न्यभावव्याप्यव्याप्यवत्त्वात् वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवान् तादृशो ह्रदः, घटाभावव्याप्यव्याप्यवान् घटाभाववान् घटाभावव्याप्यव्याप्यवांश्च तादृशो ह्रद इति निश्चयानामेकरूपेण प्रतिबन्धकत्वानु-पगमेन उक्ततृतीयसम्बन्धाभावादेव वारणीया । वह्न्यभाववद्व्याप्यव्याप्यवह्न्यभाव-वद्ह्रदादावतिव्याप्तिस्तु निरुक्ततृतीयसम्बन्धाभावात् निरुक्तरीत्या विशिष्टान्तराघटित-त्वाभावाच्च न सम्भवति । न चैव तृतीयसम्बन्धनिवेशे अभावविशिष्टव्यापकसामान्य-स्वाभाववत्कालीनस्वसमानाधिकरणाभाववानित्यत्र तादृशसाध्याभावाभाववद्वृत्तिमत्पक्षाव्या-प्तिरिति वाच्यम्, नानासम्बन्धघटितानिश्चयानामेकरूपेण प्रतिबन्धकत्वानुपगमे-नादोषात् । प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितवह्न्यभावव्याप्यवह्न्यभाववद्ध्र-दातिव्याप्तिस्तु निरुक्तविशिष्टान्तराघटितत्वाभावादेव वारणीया । वृत्तिव्यापकग-गनाभावकालीनगगनपक्षकगगनसाध्यकस्थले उक्तातिव्याप्ति तद्व्यवहितपूर्वोक्ताति-व्याप्तिश्च उक्तविशिष्टान्तराघटितत्वाभावादेव निवारिता । इतो वह्निमानित्यत्र घटका-लीनवह्न्यभावाभाववद्वृत्तिमत्पक्षेऽतिव्याप्ति तत्पक्षाभावादेव नास्ति । तच्छरीरे वह्न्यभावव्याप्तेरप्रवेशात् । न च तदभावव्याप्तेरप्रवेशेऽपि तन्निर्णयस्य तद्वत्ताबुद्धि-विरोधित्वमावश्यकम्, अन्यथा महानसीयवह्निव्याप्यवत्तापरामर्शोत्तरं उक्तपरामर्शे ■ सति संशयाकारानुमितिर्दुर्वारा स्यादिति वाच्यम्, संशयाकारानुमित्यापत्तिवार-णायैव कस्यचित्प्रतिबन्धकत्वावश्यकत्वस्य कथंचिदप्यदुष्टत्वात् । प्रकारान्तरेण प्रतिबन्ध-करणे स्थापिते सति तत्तावच्छेदकतावच्छेदकधर्मान्ततया हि संशयाकारानुमितिर्निरस्ता ग्रन्थकृता । अन्यथा "परेति" त्यादिना संशयाकारानुमितिस्थापन भट्टाचार्याणामनु-पपन्नं स्यात् । एतदापत्त्यैव तादृशकपिसंयोगाभावव्याप्यवत्ताज्ञानस्यापि प्रतिबन्धकत्व-कल्पनसम्भवात् । एवं तादृशनिश्चयस्य मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वोपगमे सा-मान्यलक्षणस्य पर्वतपक्षकवह्न्यभावव्याप्यवत्त्वस्थले पर्वतीयवह्निव्याप्यवत्पर्वतातिव्या-प्तिः । अस्तु वा उक्तनिश्चयस्य विरोधित्वम्, तावतापि नोक्तातिव्याप्तिरवकाशमिति

वारणीया, अतकनायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशोऽपि अस्या दुर्वा-
रत्वात्। उभयेऽपि विशिष्टान्तराघटितत्वनिवेशेन तद्वारणं तु चिन्त्यम्। इदन्त्वावच्छेदेन
यत्कालीनवह्न्यभावावगाहिनो निश्चयस्य यत्कालीनवह्न्यभाववत्त्वावच्छिन्ने इदन्त्वाव-
च्छिन्नत्वावगाहित्वेऽपि उत्तरीत्यवलम्बने प्रतिबन्धकत्वानपायात्। तस्याश्च विशिष्टा-
न्तरविषयकत्वानवच्छिन्नत्वात्। चन्द्रनारायणादिभिस्तु तस्य प्रतिबन्धकत्वास्वीकारे-
ऽपि तादृशविशिष्टस्य सत्प्रतिपक्षरूपत्वस्वीकारात् तत्पक्षे न कोऽपि दोष इति तत्पक्ष
एव समीचीनतया प्रतिभाति। न चैवंविधविशिष्टान्तराघटितत्वनिवेशे अनुयोगि-
तासम्बन्धेनाभावविशिष्टव्यापकगगनाभावकालीनगगनसाध्यकाभावपक्षकस्थले अ-
भावावृत्तित्वव्याप्यतदवच्छिन्नत्वताहशगगनेऽव्याप्तिः, तदवच्छिन्नव्यापकतानिरूपि-
तस्य विशिष्टान्तरत्वादिति वाच्यं सम्भवतीति वाच्यम्,—अभावावृत्तिताहशगगन-
स्य गगनत्वाघटिताभावरूपविशिष्टान्तरघटितत्वेन सामान्यलक्षणानाक्रान्ततया तस्य
बाधत्वास्वीकारेण निरुक्तविशिष्टस्य सत्प्रतिपक्षरूपत्वस्वीकारात्। अन्यथा उभये
विशिष्टान्तराघटितत्वनिवेशपक्षेऽपि उक्ताव्याप्तेर्दुर्वारत्वात्। न च विशिष्टान्तरवि-
षयकत्वाव्यापकत्वं तद्व्यापकविशिष्टत्वम्, व्यापकत्वञ्च स्वरूपसम्बन्धनिरूपितप्रतिबध्यताव-
च्छेदकावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वोभयसम्बन्धेन। इत्थञ्च नोक्तविशि-
ष्टे सामान्यलक्षणाव्याप्तिः, गगनत्वाघटितविशिष्टविषयकज्ञानस्य प्रकृतानुमितिप्रति-
बन्धकत्वात्, इत्थञ्च सुन्दरवह्निमद्वह्निमत्कालीनपर्वतस्सुन्दरवह्न्यभाववानित्यत्र सुन्दर-
वह्निमत्ताहशपर्वतरूपबाधेऽपि नाव्याप्तिः, वह्निमान् ताहशपर्वत इति ज्ञानस्य
प्रकृतानुमितिप्रतिबन्धकत्वेन तस्य विशिष्टान्तरत्वासम्भवादिति वाच्यम्,—वह्न्यभाव-
वत्सुन्दरवह्न्यभाववत्कालीनसुन्दरवह्निमद्वह्निमत्कालीनपर्वतस्सुन्दरवह्न्यभाववान् इ-
त्यत्र सुन्दरवह्निमत्ताहशपर्वतरूपबाधाव्याप्तेस्तादवस्थ्यापत्तेः। पर्वतत्वावच्छेदेन
वह्निमत्त्वसामानाधिकरण्येन पर्वतावृत्तित्वयोरविरोधेन पर्वतत्वावच्छेदेन वह्न्यभा-
वत्वे वह्निमत्सामानाधिकरण्येन पर्वतावृत्तित्वस्यैवाभाववत्त्वावच्छेदेन निरुक्तगगन-
साध्यकस्थलेऽपि ताहशगगनत्वसामानाधिकरण्येनाभावावृत्तित्वस्यादोषतया निरुक्त-
रीत्या विशिष्टान्तराघटितत्वपरिष्कारे तदानीन्त्वाप्तिदुर्वारा स्यादिति विशिष्टान्तरवि-
षयकज्ञानवच्छिन्नप्रतिबन्धकतायामन्यज्ञानविषयमात्रस्यात्मप्रयोजकतया पृथगेव आश्रयणी-
यत्वात्। शङ्करभट्टाचार्यादिभिरनुपदमेव तथोक्तत्वात्। निष्कर्षितोऽपि विशिष्टान्तराघ-
टितत्वघटितसामान्यलक्षणपरिष्कारे मेयत्वविशिष्टसाध्यकस्थलेनिरुक्तव्याप्तेश्च दुर्वा-
रत्वात् अप्रामाण्यवर्णयोगेन गगनप्रकारकज्ञानसामान्यस्य योगेन गगनवदित्यत्र मेय-
त्वविशिष्टगगनाभाववत्ताहशज्ञानस्य बाधानिप्याप्तेश्च। यद्यपि जलस्या-

पक्वह्न्यभावकालीनवह्नौ वह्निमानित्यत्र वह्न्यभावव्याप्यजलत्वस्य तादृशहेतु-
त्वादिष्टापत्तिः, तथापि पक्षतापरिच्छिन्नविषयकनिश्चये धर्मविशिष्टान्य-
त्वविशेषणदानेन तादृशस्थलेऽप्यव्याप्तिर्निरसनीया। धर्मवैशिष्ट्यञ्च स्वविशिष्टप्रकार-
तानिरूपितविशेष्यत्वसम्बन्धेन। प्रकारतायां स्वविशिष्टत्वञ्च स्वावच्छिन्नत्वस्वावच्छिन्नप्रका-

'इत्यप्रतिपक्षेऽपि इत एवातिव्याप्तिवारणसम्भवे प्रतिबन्धकतायामपि विशिष्टान्तराघटितत्वं विफलमिति वाच्यम्, प्रतियोगिवैयधिकरण्यघटितवह्न्यभावव्याप्यवह्न्यभाववद्वृत्तित्वातिव्याप्तिवारकतया तत्सार्थक्यात् । अत एव जनकतामात्रे तन्निवेशनमपि दूरोत्सारितम् । यदि च स्वरूपसम्बन्धेनैव विशेष्यदले जनकतायां व्यापकत्वं निवेश्य जनकत्वप्रतिबन्धकत्व उभयस्मिन् विशिष्टान्तरविषयकत्वानवच्छिन्नत्वं निवेश्यत इत्युच्यते, तदा तथा स्वैरं निवेश्यताम्, जनकतामात्रे तन्निवेशनासम्भव एव शतकोटिकृतो इतरेषां च निर्भरात् । एवं जनकतामात्रे तथानिवेशे प्रतियोगिवैयधिकरण्यघटितवह्न्यभावाभावव्यापकीभूताभावप्रतियोगिवह्न्यभाववद्ध्रदे, एवं आधेयत्वं अभाववन्निरूपितत्वाभाववत् इत्यत्रावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे प्रतियोगिवैयधिकरण्यघटितसाध्याभावाभाववद्वृत्तित्वपक्षे चातिव्याप्तिर्दुर्वारा स्यात् ।

एतेन जनकतायां प्रकृतानुमितिप्रतिबन्धकताव्याप्यत्वस्य उक्तेयप्रकारतावच्छेदकावच्छिन्नाभाववत्ताबुद्धिप्रतिबन्धकताव्याप्यत्वस्य वा निवेशोऽपि न निस्तारः, प्रकृतानुमितिप्रतिबन्धकताव्याप्यत्वस्य जनकतायां निवेशो सत्यन्तवैयर्थ्याच्च । असम्भवति सार्थक्ये वैयर्थ्यापरपर्यायतात्पर्यग्राहकत्वकल्पनाया अन्याय्यत्वात् । एवं आधेयतात्वावच्छेदेन अभाववन्निरूपितत्वाभावसाध्यकस्थले प्रतियोगिवैयधिकरण्यघटिताभाववन्निरूपितत्वाभावव्यापकीभूताभावप्रतियोगि अभाववन्निरूपितत्ववदाधेयत्वे, एवं घटो वृत्तिमज्ज्ञेय इत्यत्र प्रतियोगिवैयधिकरण्यघटितव्यापकताघटितवृत्तिव्याप्यवत्त्वावच्छिन्ने चातिव्याप्तिर्दुर्वारा स्यात् । एवं यावन्तस्सम्बन्धाः प्रसिद्धाः तत्तत्सम्बन्धेन वृत्तिव्यापकवृत्तिव्याप्यप्रमेयत्वकालीनघटपक्षकवृत्तिमत्त्व-साध्यकस्थले वृत्तिव्याप्यप्रमेयत्वव्याप्यवत्ताकघटे अतिव्याप्तिः, तादृशघटे वृत्तिव्याप्यप्रमेयत्वाभाववत्ताबुद्धौ तत्तत्सम्बन्धेन वृत्तिमत्तानिश्चयस्य पृथक् पृथक् प्रतिबन्धकतावैलक्षण्या यत्किञ्चित्सम्बन्धावच्छिन्नवृत्तिप्रकारकताशालिघटविशेष्यकनिश्चयत्वेन लाघवादनुगतरूपेण प्रतिबन्धकत्वोपगमेन उक्तेयप्रकाराभाववत्ताबुद्धिप्रतिबन्धकताया एकरूपेण जनकत्वाभ्युपगमेऽपि तज्जनकताव्यापकत्वाक्षते । प्रकृतानुमितिप्रतिबन्धकताव्यापकत्वस्य च तत्र सत्त्वात् प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वव्यापकत्वनिवेशनमन्तरेण उक्तातिव्याप्तेरवारणपरिहारतया जनकतामात्रे तन्निवेशनमत्यादराया असम्भवात् ।

अतेदमवधेयं सम्यक्प्रतिबन्धकतायां पूर्वोक्ततृतीयसम्बन्धनिवेशे गगनत्वान्धेयाभावविशिष्टव्यापकगगनाभावकालीनगगनपक्षकगगनसाध्यकस्थले तादृशगगनावृत्तित्वाभाववद्वृत्तिमद्गगनेऽतिव्याप्तिः, अतो जनकतायामेव उक्तेयप्रकाराभाववत्ताबुद्धिप्रतिबन्धकताव्याप्यत्वं निवेश्यम्, इत्थञ्च तथानिवेशे ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवह्न्यभाववद्ध्रदे एकरूपेण जनकत्वानभ्युपगमपक्षे वृत्तिव्या-

पक्षगगनाभावकालीनगगनपक्षकगगनसाध्यकस्थले प्रतियोगिवैयधिकरण्यघटितगगनाभावव्याप्यतद्व्याप्तिमत्ताहशघटे, आधेयतात्वावच्छेदेनाभाववन्निरूपितत्वाभावस्य साध्यत्वे तादृशसाध्यवद्वृत्तिमत्पक्षे, एवमन्यत्राप्यतिव्याप्तिः जनकताभागे विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशो सम्भवति । न च स्वावावच्छेदकाभावत्वावच्छिन्नविषयतात्वसम्बन्धेन जनकताया व्याप्यत्वस्य अवच्छेदकतासम्बन्धेन प्रतिबन्धकताया व्यापकत्वविवक्षणान्नैतद्दोषावकाश इति वाच्यम्, एवमपि अव्याप्यवृत्तित्वज्ञाननिरहकाले वह्न्यभावाभाववत्ताबुद्धौ वह्न्यभावव्याप्यवह्न्यभाववत्ज्ञानस्यापि प्रतिबन्धकतया तस्याश्चावच्छेदकतासम्बन्धेन स्वावच्छेदकाभावत्वावच्छिन्नविषयतायामक्षतत्वेन तावताप्युक्तातिव्याप्तेरनिराकरणात् । न च स्वावच्छेदकाभावत्वावच्छिन्नविषयतात्वस्वरूपान्यतरसम्बन्धेन व्याप्यत्वस्य स्वरूपावच्छेदकत्वान्यतरसम्बन्धेन व्यापकत्वस्य विवक्षणेनोक्तदोष इति वाच्यम्,—एवमपि ह्रदपक्षकवह्निसाध्यकस्थले वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ह्रदे, जल‍सामानाधिकरण्याभाववदित्यत्र सामानाधिकरण्यव्याप्यजलव्याप्यवत्काले चातिव्याप्तेः । एवं ह्रदो वह्निमानित्यत्र जलवद्ह्रदव्याप्यवह्न्यभाववज्जलवति, आधेयतावच्छेदेन स्वरूपसम्बन्धेन वह्न्यभाववदभाववन्निरूपितत्वत्वकालीनवह्निसाध्यकस्थले तादृशवह्न्यभाववद्वृत्त्यभाववद्वृत्तिसद्धाधेयत्वे चातिव्याप्तेः । यदि च प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशे दोऽपि वह्न्यभावयद्वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदपक्षकवह्निसाध्यकस्थले वह्न्यभावव्याप्यव्याप्यवत्ताहशह्रदे, एवमभावविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वसाध्यकस्थले तादृशसामान्यत्वाभावव्याप्यद्रव्यत्वाभाववद्वृत्तिमद्घटे, एवमभावविशिष्टव्यापकगगनाभावकालीनगगनसाध्यकस्थले तादृशगगनावृत्तित्वव्याप्यद्रव्यत्वत्ववद्वृत्तिमद्गगने चातिव्याप्तिवारणाय पूर्वविशेष्यदलपरिष्कारस्यावश्यकत्वमाऽस्मन्मतेऽपि नोक्तदोष इत्युच्यते, तथा भवन्मते जलवद्ह्रदकालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यव्याप्यवत्ताहशह्रदेऽतिव्याप्ते । प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशमन्तरेण वारणसम्भवाच । एवं जलवद्ह्रदसाध्यवह्न्यभाववज्जलवदादौ चोक्तातिव्याप्तेरवारणात् सत्यन्तवैयर्थ्यांच । अस्मन्मते सैयत्वविशिष्टसत्प्रतिपक्षानिव्याहितादत्तवैव तत्सार्थक्यात् ॥

॥ इत्यलम् ॥

# कांच्यां—श्रीसुदर्शनमुद्रायन्त्रालये क्रय्याणि पुस्तकानि.

| नं. | नाम | रु | आ |
|---|---|---|---|
| | **वैदिक ग्रन्थाः ।** | | |
| १. | श्रीसूक्तभाष्यम् | ० | २ |
| २. | पुरुषसूक्तभाष्यम् | १ | ० |
| ३. | तैत्तिरीयोपनिषद्भाष्यम् | ३ | ० |
| ४. | सन्ध्यावन्दनभाष्यम् | ० | ८ |
| | **वेदान्त ग्रन्थाः ।** | | |
| ५. | शतदूषणी भा—१ | ४ | ६ |
| ६. | शतदूषणी भा-२ | ३ | १२ |
| ७. | शतदूषणी भा--३ | ३ | १२ |
| ८. | शतदूषणी भा-४ | ३ | १२ |
| ९. | भगवद्गीता प्रतिपदार्थविवरणसहिता | २ | २ |
| १०. | भगवद्गीता-वरवरमुनिव्याख्यासहिता | २ | ४ |
| ११ | गीतार्थसंग्रह-रक्षया सहितः | ० | ६ |
| १२. | तत्वनिर्णयः (शैववैष्णववाद) | ० | ४ |
| १३. | सिद्धान्तचिन्तामणिः | ० | १२ |
| १४. | पाराशर्यविजयः (प्रथमाध्यायप्रथमपादः) | ४ | ० |
| १५. | वेदान्तविजय. [गुरुपसत्तिविजयः, ब्रह्मविद्याविजयः, सद्विद्याविजयः, अद्वैतविद्याविजयः, परीकरविजयः ] | (यन्त्रस्थः) | |
| १६. | यतिलिङ्गसमर्थनम् | ० | ४ |
| १७. | प्रपन्नपारिजातः | ० | ४ |
| १८. | न्यायभास्करः (जगन्मिथ्यात्वखण्डनम्) | १ | ८ |
| १९. | भेदवादःतत्क्रतुन्यायविचारश्च | ० | ४ |
| २०. | दृश्यत्वानुमाननिरासवादःमोक्षकारणतावादश्च | ० | ४ |
| २१. | कार्याधिकरणवाद.भा१ | ० | १० |
| २२. | कार्याधिकरणवाद भा२ | १ | ० |
| २३. | कार्याधिकरणतत्त्वम् | ० | १४ |
| २४. | श्रीरामानुजसिद्धान्तसार. | १ | ० |
| २५. | श्रुतितात्पर्यनिर्णयः (यन्त्रस्थः) | | |
| | **मीमांसा ग्रन्थाः ।** | | |
| २६. | भाट्टरहस्यम् | १ | ८ |
| २७. | मीमांसापादुका | ० | ४ |
| २८. | मीमांसाकौस्तुभ भा१ | १ | ४ |
| २९. | मीमांसाकौस्तुभ भा४ | १ | ६ |
| ३०. | मीमांसाकौस्तुभ भा५ | १ | ६ |
| ३१. | सेश्वरमीमांसा | १ | १४ |
| | **न्याय ग्रन्थाः ।** | | |
| ३२. | प्रामाण्यवादः | १ | ४ |
| ३३. | अवच्छेदकत्वनिरुक्ति. | ० | १५ |

| न | नाम | रु | आ |
|---|---|---|---|
| ३४. | बाधगादाधरी | ० | १५ |
| ३५. | मूलगदाधरीये शब्दखण्ड | १ | ४ |
| ३६. | उपाधिवाद गादाधरस्य | २ | ० |
| ३७. | गादाधरी चतुर्दशलक्षणी | १ | १४ |
| ३८. | गादाधरी पञ्चलक्षणी | ० | ८ |
| ३९ | सिद्धान्तलक्षणम् | १ | ४ |
| ४०. | पक्षता-गादाधरी | १ | ८ |
| ४१. | व्युत्पत्तिवाद | २ | ८ |
| ४२ | [illegible] | १ | ८ |
| ४३. | सामान्यनिरुक्ति | ० | १२ |
| ४४. | पदवाक्यरत्नाकर | २ | ८ |
| ४५ | [illegible] | १ | ० |
| ४६ | तत्त्वचिन्तामणौ अवयवग्रन्थ | १ | ० |
| ४७ | सत्प्रतिपक्षग्रन्थ | ० | १४ |
| ४८. | शतकोटि | ० | ६ |
| ४९ | शतकोटिखण्डनम् आकृष्णताताचार्यकृ. | ० | ६ |
| ५०. | शतकोटिखण्डनम् श्रीमदनन्ताचार्यवर्यकृ. | ० | १२ |
| ५१. | शतकोटिखण्डनम् विजयराघवाचार्यवि. | १ | ० |
| | **पाञ्चरात्र ग्रन्था ।** | | |
| ५२. | सात्वतसंहिता | २ | ८ |
| ५३. | ईश्वरसंहिता | ७ | ८ |
| ५४. | पारमेश्वरसंहिता सव्याख्या | १० | ० |
| | **सम्प्रदाय ग्रन्था ।** | | |
| ५५. | तत्त्वत्रयम् | ० | ४ |
| ५६. | मुमुक्षुप्पडिरहस्यम् | ० | ४ |
| ५७. | श्रीवचनभूषणम् | ० | ८ |
| ५८. | श्रीवादिभीकरवैभवम् [सचित्रम्] | ० | ६ |
| ५९. | श्रीवादिभीकरवैभवम् [चित्ररहितम्] | ० | ४ |
| ६० | [illegible] | 0 | 6 |
| ६१. | [illegible] | ० | [illegible] |
| ६२ | [illegible] | 0 | 4 |
| ६३. | [illegible] | ० | [illegible] |
| ६४. | [illegible] | ० | [illegible] |
| 65 | [illegible] | 1 | 8 |
| 66 | [illegible] | 0 | 2 |
| 67 | [illegible] | [illegible] | |
| 68 | [illegible] | ,, | |
| 69 | [illegible] | 0 | 2 |
| 70, | [illegible] | 0 | 2 |